# ॥ शौनकोपनिषत् ॥

ॐ देवासुराः संयत्ता आसन् । तेषामिन्द्रो न प्रत्यपद्यत । ते ह वसूनेव प्रातस्सवनेषु पुरोधाय व्यजिगीषन्त । ते ह नुन्नेषु नाराशंसेषु ऋषीणां यज्ञवास्त्वभ्यायन् हनिष्याम वा एतद्वो यद्देवान्न पराभावयिष्यथेति । ते ह बिभ्यत एव स्तोकानुदकल्पयन् विजेप्यध्वे वावैतानन्विति । ते ह तत ??र्तिमाच्छंस्तानन्वितरान् पराभावयन् । ततो हेन्द्रोऽपश्यत् । स ह गा??वीमेव प्रतिसन्दिदेश । सा होवाच । बिभेमि वा एतदेतेभ्यो यथैतत्परावृतन्निति । स प्रणवमेवास्याः पुरोगमकरोदेष वाव ते गोप्यायेति । सा होवाच । यदेष पुरोगाः उदेष मे भागधेयी स्यादिति । स होवाच । न ह वावैष त्वद्भागधेयी भवति । महान्वा अस्य महिमा न ह वा महीयांसो भागक्लृप्तिमप्याभजन्तीति । विश्वमिन्नु समन्वालभध्वमिति । सेनान्यास्तु प्रथमजानाप्याययिष्यसीत्योमिति होवाच । स होवाच यत्प्रथमं नाभ्यकीर्तयो नामग्राहमथ नानुवत्स्य इति । नामग्राहमेतेन सर्वमभिपद्यन्ते । सर्वं वा एष सर्वमश्नोतीति । अक्षरं वा एषः । तस्मादोमित्यनुजानन्ति । ओमिति प्रतिपद्यन्त ओमित्यभ्याददत ओमित्यभिनिधापयन्ति । तदेतदक्षरं जैत्रमभित्वरं सर्वाणि भूतान्यभ्यात्तं यदनेकमेकं नानावर्णं नानारूपं नानाशब्दं नानागन्धं नानारसं नानास्पर्शमिति । अथो खल्वाहुरिन्द्रो वा चैतदक्षरम् । सर्वाणि ह वा इमानि भूतान्येतदक्षरमन्वायत्तानि सर्वे वेदाः सर्वे यज्ञा इत्यथ खल्विन्द्रमन्वायत्तमिति ॥

स मन्द्रेणैवान्वाभक्तो विदिद्युतेऽञ्जसैव भ्रातृव्यानपहनानीति । तस्मान्मन्द्रं प्रातःसवनमभवद्यद्गायत्रं तद्गायत्री तद्गायत्रं यद्वसवः तद्वसव्यम् । स ह प्रणव उवाच । यदहं सर्वं भवानि यद्गायत्री वै पुरोगाः तत्किं मे स्यादिति । गायत्रमन्वेव गायत्रीमन्वेव त्वा सर्वरूपमिमं कृत्वा हिङ्कुर्वन्ति । स हापश्यन्नैतदञ्जसैव सर्वा रूपाण्येवमभिचक्षीरन्निति । स हान्तत एवात्मानमुपसंहृत्य तावदेवाग्राहयत् । स विशृङ्ग एवाभवत् । तस्माद्विशृङ्गमेवैतदिहानुद्रवन्ति । तदाहुर्यद्वा एतस्य वीर्यं यच्छुक्रं यज्ज्योतिर्यदमृतं यदजर्यं तदवरमिति । तस्मात्तत एवातो ज्योतिरमृतमजर्यं प्रतिपद्यन्ते । ततो हासुराः पराभवन् । स एष इन्द्रः सर्वं यद्गायत्री उद्गीथो वसवः प्रातस्सवनमिति । तदाहुः । सर्वं वा एतदिन्द्रो यज्जगद्यथैवेति ॥

ततो हासुराः पुनरेवोदयन्ति । ते ह माध्यन्दिनस्यैव सवनस्य पवमानेषु यज्ञवास्त्वभ्यायन् । तेषां जरितारो बिभ्यत एव

वसतीवरीरुपाकल्पयन् । ते ह ताभिरेव जिघांसन् । तेषामिन्द्रो रुद्रानेव सेनान्योऽकः । ते हाक्षीयन्त । स ह त्रिष्टुभमेव प्रतिसन्ददत् । साब्रवीत् । बिभेमि वा एतदेतेभ्यो यथौजीयांसो बलीयांस इमे पराभवन्निति । स ह प्रणवमेवोवाच पुरोगायमेवारभस्वेति । सोऽब्रवीत् । किं मेऽतः स्यादिति । यदहं स त्वं ममैव रूपेण न्यूंखयिष्यन्ति त्वामिति । स हापश्यत् । सर्व एव न्यूंखयन्तो मामभिचक्षीरन्निति । स ह सर्वमेवात्मानमुपसंहृत्य शृङ्ग एवागूहयत् । स ह विशृङ्ग एवाभवत् । तस्मादित्थैव न्यूंखयन्ति । ततो हासुराः पराभावयन् । तस्माद्रुद्रानेव माध्यन्दिनं सवनं त्रैष्टुभं चेति ॥

ते हासुराः पुनरेवोदपतिष्यन्त । ते ह तृतीयस्येह सवनस्य पवमानेषु यज्ञवास्त्वभ्यायन् । तेषामिमे बिभ्यत एवांशूनुपाकल्पयन् । ते ह तैरेव देवानपाजिघांसन् । तेषामिन्द्रो जगतीमेव प्रतिसन्दिदेश । साब्रवीत् बिभेमि वा एतदेतेभ्यो यथौजीयांसो बलीयांस इमे परावृतन्निति । तस्या इन्द्रः प्रणवमेव पुरोगामकरोत् । स होवाच । किं मेऽतः स्यादिति । स होवाचेन्द्रो यत्त्वामुद्गीथेनोपावनेष्यन्ते तेनैव ते कल्पयिष्यन्तीति । सेनान्यो हि तर्ह्यादित्यानकल्पयन् तस्माज्जागतं तृतीयसवनमादित्यानाम् । स हापश्यदादित्यो वा उद्गीथोऽसौ खल्वादित्यो ब्रह्म । न ह वा एनं मिथु चिदेमीति । स ह स्वेनैव रूपेणादित्यानगच्छत् । स ह तेनैव वज्रेणासुरान् पराभावयन् । तद्यत् स्वेनैव रूपेणाविस्तरामगच्छत्तत्प्रतिष्ठामविन्दत् । प्रतिष्ठा ह वा एषा यत्प्रणवः । सर्वाणि ह वा इमानि भूतानि प्रणव एव प्रतितिष्ठन्ति । तस्य ह वा एषा प्रतिष्ठा यत्रासावात्मानमुपसंहृत्याजूगुपत् । तस्मात्तदेवोपन्वीतेति तदेवोपासीत । तदेतदृचाभ्युक्तम्--

चत्वारि शृङ्गा त्रयो अस्य पादाः
  द्वे शीर्षे सप्तहस्तासो अस्य ।
त्रिधा बद्धो वृषभो रोरवीति
  महो देवो मर्त्या□ आविवेश ॥ इति ॥

यदिमास्तिस्रोथासाविति चत्वारीति । यदिमे द्वे एवाक्षरे त्रिभिरुपन्वन्ति तत्त्रय इति । यत्प्रत्यक्षं तद्वै इति । यदुद्गीथं सप्तभिरभिप्रपद्यन्ते तत्सप्तेति । अथो खल्वाहुः । सप्तभिरेनं स्वारयन्तीति । यदीमान् त्रीनभिधत्ते तत्त्रिधेति । यदिन्द्र एवोद्गीथस्तद्वृषभ इति । तदेतदृचाभ्युक्तम्--

मरुत्वन्तं वृषभं वावृधानम् ।
यद्द्रावयन्ति तद्रोरवीति ॥

यदेष सर्वाणि भूतान्यनुप्रविष्टस्तन्मर्त्या□ आविवेशेति ।
तस्मादोमित्येकाक्षरमुद्गीथमुपासीतेत्याह भगवान् शौनकः शौनक इति ॥

इति शौनकोपनिषत् समाप्ता ।